# हयग्रीवसमप्दास्तोत्रम्

हयग्रीव हयग्रीव हयग्रीवेति वादिनम् ।
नरं मुंचन्ति पापानि दरिद्रमिव योषितः ॥ १॥

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निस्सरते वाणी जह्नुकन्या प्रवाहवत् ॥ २॥

हयग्रीव हयग्रीव हयग्रीवेति यो ध्वनिः ।
विशोभते स वैकुण्ठ कवाटोद्घाटनक्षमः ॥ ३॥

श्लोकत्रयमिदं पुण्यं हयग्रीवपदांकितम्
वादिराजयतिप्रोक्तं पठतां सम्पदां पदम् ॥ ४॥

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितम् हयग्रीवसम्पदास्तोत्रं सम्पूर्णम् ॥

॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥

॥ श्रीहयग्रीवस्तोत्रम् ॥

श्री गणेशाय नमः ।
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ १॥

स्वतः सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं
हताशेषावद्यं हयवदनमीडेमहि महः ॥ २॥

समाहारः साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कथककुलकोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ ३॥

प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान्भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥ ४॥

विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणनबद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥ ५॥

अपौरुषेयैरपि वाक्प्रपञ्चैरद्यापि ते भूतिमदृष्टपाराम् ।
स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ कटाक्षणीयः ॥ ६॥

दाक्षिण्यरम्या गिरिशस्य मूर्तिर्देवी सरोजासनधर्मपत्नी ।
व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥ ७॥

मन्दोऽभविष्यन्नियतं विरिञ्चो वाचां निधे वञ्चितभागधेयः ।
दैत्यापनीतान्दययैव भूयोऽप्यध्यापयिष्ये निगमान्न चेत्त्वम् ॥ ८॥

वितर्कडोलां व्यवधूय सत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणामस्पृष्टदोलायितमाधिराज्यम् ॥ ९॥

अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान्मन्त्रमयं शरीरम् ।

अखण्डसारैर्हविषां प्रदानैराप्यायनं व्योमसदां विधत्से ॥ १०॥

यन्मूलमीदृक्प्रतिभाति तत्त्वं या मूलमाम्नाय महाद्रुमाणाम् ।
तत्त्वेन जानन्ति विशुद्ध सत्वास्तामक्षरामक्षरमातृकां ते ॥ ११॥

अव्याकृताद्व्याकृतवानसि त्वम् नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर त्वां त्वदुपज्ञवाचः ॥ १२॥

मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः ॥ १३॥

मनोगतं पश्यति यः सदा त्वां मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः किङ्कुर्वते तस्य गिरो यथार्हम् ॥ १४॥

अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ १५॥

स्वामिन्भवद्ध्यानसुधाभिषेकात्वहन्ति धन्याः पुलकानुबन्धम् ।
अलक्षिते क्वापि निरूढमूलमङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥ १६॥

स्वामिन्प्रतीचा हृदयेन धन्यास्त्वद्ध्यनचन्द्रोदयवर्धमानम् ।
अमान्तमानन्दपयोधिमन्तःपयोभिरक्ष्णां परिवाहयन्ति ॥ १७॥

स्वैरानुभावास्त्वदधीनभावाः समृद्धवीर्यास्त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां वैहारिकीं मोहनपिञ्छिकां ते ॥ १८॥

प्राङ्निर्मितानां तपसां विपाकाः प्रत्यग्रनिःश्रेयससम्पदो मे ।
समेधिषीरंस्तव पादपद्मे सङ्कल्पचिन्तामणयः प्रणामाः ॥ १९॥

विलुप्तमूर्धन्यलिपिक्रमाणाम् सुरेन्द्रचूडापदलालितानाम् ।
त्वदङ्घ्रिराजीवरजःकणानाम् भूयान् प्रसादो मयि नाथ भूयात् ॥ २०॥

परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूततमोनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः प्रबोधराजीवविभातसन्ध्याम् ॥ २१॥

त्वत्किङ्करालङ्करणोचितानां त्वयैव कल्पान्तरपालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२॥

सञ्चिन्तयामि प्रतिभादशास्थान्सन्धुक्षयन्तं समयप्रदीपान् ।
विज्ञानकल्पद्रुमपल्लवाभं व्याख्यानमुद्रामधुरं करं ते ॥ २३॥

चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चनलम्पटानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥ २४॥

प्रबोधसिन्धोररुणैः प्रकाशैः प्रवालसङ्घातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम् ॥ २५॥

तमांसि भित्वा विशदैर्मयूखैः सम्प्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥ २६॥

दिशन्तु मे देव सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रित कामधेनुम् ॥ २७॥

विशेषवित्पारिषदेषु नाथ विदग्धगोष्ठीसमराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥ २८॥

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नस्त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन्समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥ २९॥

नानाविधानामगतिः कलानां न चापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहायाः नवं नवं पात्रमहं दयायाः ॥ ३०॥

अकम्पनीयान्यपनीतिभेदैरलङ्कृषीरन् हृदयं मदीयम् ।
शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥ ३१॥

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन् मां
आविर्भूयादनघमहिमा मानसे वागधीशः ॥ ३२॥

वागर्थसिद्धिहेतोःपठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥ ३३॥

॥ इति श्रीहयग्रीवस्तोत्रं समाप्तम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥